वोरिशादसमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वरुणाय स्वाहा अपां पतये स्वाहा पाशपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १४ ॥

स उदीचीं दिशमन्वावर्त्ततेऽथ यदास्य कनकरजतवस्त्रवैदूर्य्यमणिमौक्तिकवियोगो भवत्यारम्भा वा विपद्यन्ते मधूनि वा निलीयन्ते काकमैथुनानि पश्येतान्यरिष्टानि वा वयांसि च गृहमध्ये वल्मीकं छत्राकं वोपजायते वायसकपोता वा वन्यविहङ्गशश्मृगप्रवेशो गोमृगो वा गृहमारोहेच्छुष्कवृत्तः प्ररोहेद् गृहमध्ये दूर्वाः प्ररोहन्ते तैलं स्नायेदेव श्वेतवायसो मण्डूकोऽग्निं प्रविशति सरटो मूर्ध्नि निपतति चुल्लीर्निपतति प्रज्वलन्दीपः पतति सर्पो वा द्वारे निष्क्रामतीत्येवमादीनि तान्येतानि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति अभित्वं देवं सवितारमोण्योरिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा धनाधिपतये स्वाहा हिरण्यपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १५ ॥

स पृथिवीमन्वावर्त्ततेऽथ यदास्य पृथिवीतटानि स्फुटन्ति कम्पन्ति कूजन्त्यकस्मात् सलिलमुद्गोलयति अकाले फलपुष्पमभिवर्त्तत इत्येवमादीनि तान्येतानि सर्वाण्यग्निदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निं दूतं वृणीमह इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति अग्नये स्वाहा हविष्पतये स्वाहा अर्चिःपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १६ ॥

सोऽन्तरिक्षमन्वावर्त्ततेऽथ यदास्य वाताविवाता वायन्ते

भ्रभ्रेषु वा रूपाणि दृश्यन्ते खरकरभगजकङ्कटश्येनचाषवायसगोमायुपांसून्यूपरिपांसून्मांसप्रेत्याख्यिरुधिरवर्षाणि प्रपद्यन्त इत्येवमादीनि तान्येतानि सर्वाणि वायुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति वात भावातु भेषजमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वायवे स्वाहा महाद्भुताधिपतये स्वाहा शीघ्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १७ ॥

स दिवमन्वावर्त्ततेऽथ यदास्यातिदृष्टिरतिदुःखं वा पर्वता वा स्फुटन्त्याकाशभूमिं कम्पते महाद्रुमा उन्मूलयन्ति चतुष्पादं पञ्चपादं भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्यदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति वण्महां असि सूर्येति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सूर्याय स्वाहा रुद्राधिपतये स्वाहा रविकिरणाय स्वाहा ईश्वराय स्वाहा सर्वोत्पातप्रशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १८ ॥

स रात्रिमन्वावर्त्ततेऽथ यदास्य तारावर्षाणि चोल्काः पतन्ति निपतति धूमोऽयन्दिशो दहति केतवश्चोत्तिष्ठन्ति गवां शृङ्गेषु धूमो जायते गवां स्तनेषु रुधिरं स्रवति रात्राविन्द्रधनुर्दृष्टाथ हिमान्युपपतन्ति इत्येवमादीनि तान्येतानि सर्वाणि सोमदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति आप्यायस्व समेतु त इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा शीतपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् । १९ ।

स परमन्वावर्त्ततेऽथ यदास्य महिष्यागाविकमानुषायो-

द्राविद्युरादि च प्रसूयन्ते हीनाङ्गान्यधिकाङ्गानि विकृतानि रूपाणि जायन्त इत्येवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इमा रुद्राय स्थिरधन्वने गिर इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २० ॥

स सर्वा दिशोऽन्वावर्त्ततेऽथ यदास्यायुक्तानि यानानि प्रवर्त्तन्ते देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति नृत्यन्ति खिद्यन्ति भिद्यन्ति रुदन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते विदले च परिवेषो दृश्यते केतुकुन्तमुपानच्छत्रं वज्रदन्तमुसलानि प्रज्वलन्तीत्यश्वानां वारिभिरवरङ्गाः चरन्ति हतानि कर्माणि करिक्रान्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इदं विष्णुर्विचक्रम इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाद्भुताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २१ ॥

अग्निकार्य्यमासप्तरात्रं कुर्य्युर्यदैतन्न क्रियते पुत्रो म्रियते पौत्रो म्रियते धनमात्मानञ्च निवेश्यति सुवर्णगोर्वासो हिरण्यं दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत नमः आचार्य्येभ्यो नमः आचार्य्येभ्यो नमः शौनकाय नमः शौनकाय ॥ २२ ॥

इत्याश्वलायनगृह्यपरिशिष्टे चतुर्थोऽध्यायः ।

आश्वलायनगृह्यपरिशिष्टं समाप्तम् ।

